# जगन्नाथाष्टोत्तरशतकम्



पण्डितसुदर्शन-आचार्य्यः

# जगन्नाथाष्टोत्तरशतकम्

लेखकः :

**पण्डितसुदर्शन-आचार्य्यः**

साहित्याचार्य्यः, अवसरप्राप्तसंस्कृतशिक्षकः

# उपोद्घातः

सुविशाले सुप्राचीने च संस्कृतसाहित्यजगति ऊर्जस्वल-प्रतिभासम्पन्नानां कविगणानाम् अमरलेखनीनिःसृतानि खण्डकाव्य-गीतिकाव्यशतकस्तोत्रनीतिकाव्यप्रभृतीनि सारस्वतविभवानि लघुकाव्यभावेन काव्यकृद्भिः गृह्यन्ते । काव्यस्य आभिमुख्य निर्वर्ण्य काव्यप्रकाशकारेण आलङ्कारिकशिरोमणिना मम्मटे--नोक्तम् —

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।"

अर्थात् काव्यं कीर्त्तिकरम्, अर्थप्रदायि, व्यवहारशिक्षण-कुशलं, परेषामानन्दजनकं कान्तावच्च उपदेशकम् । अनयैव उक्त्या यदेव काव्यस्य लक्ष्यम्, एतेषामपि लघुकाव्यानां तदेव महल्लक्ष्यम् । रससृष्टेः सम्वेदनशीलता एव सर्वविधकाव्यानां मुख्योद्देशः । ततः उत्कलस्य आलङ्कारिकप्रवरेण काव्यतत्वपारंगतेत परमविदुषा विश्वनाथकविराजेन तदीयसाहित्यदर्पणे काव्यस्य स्वरूपनिरूपणं कुर्वता सुष्ठु प्रोक्तम् - "वाक्यं रसात्मकं काव्यम् ।" अर्थात् रसात्मकं वाक्यमेव काव्यत्येन परिगण्यते न तु रसवर्जितं वाक्यम । यदि वयं सुसमृद्ध संस्कृतेतिहासं प्रति दृष्टिं निक्षिपामः तदा प्रथमतः अस्माकं दृग्गोचरीभूतं भवति स्वमहिम्ना विभासितं पुष्कलं वैदिकसाहित्यम् ।

एतस्मिन्नेव भक्तिमूलमङ्गलस्तोत्रसमुदायानां समाहारः दृश्यते। सत्यमिदं यत् प्रातःस्मरणीयानां वरेण्यानाम् आर्य्याणां वैदिकच्छन्दोमाध्यमेन मानसकृप्टेः प्रथमः परिप्रकाशोऽभवत् स्त्रोत्रेष्वेव। "अग्निमीळे पुरोहितम्"....अथवा 'आकृष्णेन रजसा वर्त्तमानः" .. प्रभृतयो मन्त्राः तेषामार्य्यमुनीनां प्राणेभ्यः स्वतः पारेस्फुरत् एकैकं जीवन्निदर्शनम्। विषयमिमं विचार्य्य निर्विरोधम् आभाष्यं यत् भक्तिमूला स्तुतिर्हि साहित्यसृष्टेः रस एव मूलम्। भक्तेः स्थायिभावः "देवादिविपया रतिः* इत्यस्मात् कारणात् एप एव श्रृङ्गारस्य भिन्नरूपमिति कथनं समुचितम्। परवर्त्तियुगे अवश्यमेवैष श्रृङ्गारः काव्येषु प्रमुखस्थानमगृह्णात्। एष च आदिरसभावेन गृहीतोऽभवत्। भक्तिः स्वतन्त्ररसभावेन नैव, अपितु श्रृङ्गाररसस्य एकेन भिन्नविभावरावेन गणिता। एषैवासीत् भाववाचिका, न तु रसवाचिका।

**उपजीव्यकाव्यस्य मूलरसः भक्तिः :**

वैदिकसाहित्ययुगे भक्तिभावः यथा मुख्यस्थानम् अधिकृतवान्, रामायणमहाभारतयुगेऽपि विविधरसानां समाहारमध्ये ईश्वरभक्तिरेवासीत् एकं मुख्यमाभिमुख्यम्। मर्य्यादापुरुषोत्तमं श्रीरामचन्द्रं प्रति भक्तिभावप्रकटनाय यथा रामायणं लिखितं तथैव विरचितं महाभारतं योगेश्वरस्य श्रीकृष्णस्य यशोगाथां श्रावयित्वा कृष्णभक्तेः परमोत्कर्षप्रतिपादनार्थम्। एतत् काव्यद्वयं उपजीव्यकाव्यमिति समालोचकैः मनीषिभिरभिधीयते। काव्यस्य

आत्मस्वरूपो रसः अस्यैव काव्यद्वयस्य मध्ये सर्वत्र प्रकटितः । किन्तु भक्तिस्तु काव्यद्वयस्य मुख्यविभावः एतत् सर्वथा स्वीकार्य्यते ।

## पुराणेषु भक्तिभावः

अनन्तरं देशेऽस्मिन् आविर्भूतः पुराणसाहित्यस्य युगः । अष्टादशपुराणानि मुख्यतया प्रचारयन्ति उदात्तदेवभक्तिसंगीतम् । कश्चित् पुराणग्रन्थः वैष्णवभावस्य उत्कर्षं समुद्घोषयति, कश्चिच्च शैवतत्त्वम् । कश्चित् गाणपत्यं कश्चिद् वा शाक्तम् अथवा सौरतत्त्वं कश्चित् । एवं भक्तिभावस्य परिवेषणेन मुखरितं खलु पुराणसाहित्यम् ।

## काव्येषु भक्तिभावना

तदनन्तरं भारतवर्षस्य सर्वेष्वेव राज्येषु संस्कृतरसिकानां गुणग्राहिणां नरपतीनां साहाय्यं प्रोत्साहनं च समुपलभ्य एकैका विद्वत्परिषद् गठिता । कालिदासभारविमाघभवभूतिप्रभृतयः विश्वविश्रुतकवियशोऽधिकारिणः महाकवयः अजायन्त पुण्यभूमि-भारतवर्षे । तेषां भारतीवरपुत्राणां लेखनीमुखात् निःसृतानि गिरि-निर्झरिण्य इव रघुवंशकुमारसम्भवकिरातार्ज्जुनीयशिशुपाल वधोत्तररामचरितादीनि रत्नोत्तीर्णानि रसिकमनोरञ्जनानि कालजयिकाव्यानि । किन्तु सर्वेष्वेव रसेषु काव्यानामेतेषामवयव-समुदायेषु अन्तर्निहित आसीत् भक्तिभावनायाः अनवद्यपरिप्रकाशः ।

रघुवंशमहाकाव्ये यथा रामचन्द्रस्य अलोकसामान्यगुणावली संकीर्त्तिता, तथैव कुमारसम्भवे पार्वतीपरमेश्वरयोः अनन्यसाधारण-चरित्रप्रख्यापनं प्रकटितम् । शिशुपालवधे श्रीकृष्णस्य लोकोत्तर चरितानि यथा सम्यक् वर्ण्णितानि तथैव किरातार्जुनीयं शिवस्य महिम्नः वर्ण्णनया मुखरितम् । एतदतिरिच्य काव्यारम्भे 'नान्दी' क्रमेण भगवद्वन्दना एव स्थानिता । स्थूलतः एतद् वक्तव्यं यत् भक्तिभावनां परिहाय भारतीयकविमण्डली तदीयसाहित्यं स्रष्टुं कदापि नाभिलषितवन्तः ।

## शतके लघुकाव्ये वा भक्तिः

एतत्काव्ययुगस्य मध्ये लघुकाव्यस्य युगः परिदृश्यते । संस्कृतभाषया शतश्लोकपरिमितरचना एव शतकनाम्ना आख्यायते । शतश्लोकान्वितं क्षुद्रकाव्यं लघुकाव्यस्यास्य रूपान्तरमेकम् । किंतु अनेके कवयः केवलमेव अष्टावेव श्लोकान् अष्टकं वा विरच्य सहृदयानां मनोजयं कृतवन्तः । मयूराभिधानस्य कवेः मयूराष्टक-मेव एवंविधविजयस्य एकं प्रकृष्टमुदाहरणम् । तद् यद् भवतु एतत् स्वीकरणीयं यत् शतकस्य स्थानम् अष्टकापेक्षया उच्चतरम् । पुराणभारतवर्षे शतकरचनां कृत्वा भूयांसः कवयः कविसमाजे गौरवास्पदं स्थानमधिकृत्य विद्वन्मण्डलीनां वन्दनीया अभवन् । नीतिशतकशृङ्गारशतकवैराग्यशतकानां रचयिता भर्त्तृहरिः, अमरुशतकस्य प्रणेता अमरुकः भल्लट शतकस्य कवयिता भल्लटश्च तेषां शतकरचयितृणां मध्ये अन्यतमाः महाकाव्यप्रणेतृणां येषां

केषाञ्चित् महाकवीनां तुलनया एषां शतककाराणां कवित्वपाटवं न कथमपि न्यूनतरम्। शतके रसविन्यासः कीदृशः, शब्दसंयोजना कीदृशी कीदृशं च मनोहारि पदलालित्यं, भावसम्पच्च कीदृशी तद्विषये पाठकानाम् अवगत्यर्थं केवलमेकमेव उदाहरणमधस्ता-दुद्धि्यते।

यथा—

महीं रम्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः।
शरच्चन्द्रो दीपो विरतिवनितासङ्गमुदितः
सुखी शान्तः शेते मु नरतनुभूतिर्नृप इव।

(भर्त्तृहरि-वैराग्यशतकम्)

## स्तुतिकाव्यम् वा भक्तिसाहित्यम्

शतकमाध्यमेन स्तुतिकाव्यरचनापरंपरा प्राचीनकालात् भारतवर्षे सुप्रतिष्ठिता। अस्याः सुमहत्याः परंपरायाः समुन्नतं वलीयश्च नेतृत्वं गृहीतवन्तः मयूरभट्टवाणभट्टप्रभृतयः प्रथितयशसः कवयः। मयूरकवेः सूर्य्यशतकं वाणभट्टस्य च चण्डीशतकं एकैकः अमूल्यः ग्रन्थः। अनयोः ग्रन्थरत्नयोः वर्ण्णितस्य भक्तिरसश्य च तुलना अन्यत्र दुर्लभैव। आर्य्य सभ्यतायाः अभ्युत्थानकालात् अर्थात् वैदिकयुगादारभ्य अधुनावधि निरवच्छिन्नतया भक्ति-साहित्यस्य महती परंपराधारा प्रवहति। रावणाष्टकशिवमहिम्न-स्तोत्रचण्डीशतकसूर्य्यशतकमोहमुद्गर देवीस्तोत्रहयग्रीवस्तोत्र

दयाशतकाष्टभुजाष्टकगोदास्तुतिरामचापस्तवरामवाणस्तवार्द्ध नारी-श्वरस्तोत्राम्बास्तुतिदेवीशतकसौन्दर्य्यलहरीप्रभृतयः भक्तिसाहित्य-ग्रन्थाः शङ्कराचार्य्ययामुनाचार्य्यकुलशेखरसोमेश्वर रामभद्रदीक्षितादिभिः वरेण्यैः प्रतिभाशालिभिरेव कविभिर्विरचिताः । तेनैव पथा पथिकेन भगवद्भक्तिसुधार्णवमग्नमानसेन मया केवलमेव अकारणकरुणापरायणस्य नीलाद्रिवासिनः श्रीजगन्नाथस्य प्रसादात् विरचितम् अष्टकशतकयो समाहारीभूतं जगन्नाथाष्टोत्तर-शतकाभिधानं पुस्तकमिदम् । यस्य करुणामयस्य करुणया मूको वाचालतां पङ्गुश्च पर्वतलङ्घनसामर्थ्यं लभेते तस्यैव करुणाकणं लब्ध्वा कवित्वशक्तिविवर्जितेनापि मया भक्तिपुस्तकमिदं प्रणीतम् । अतः पुण्यभूमेः उत्कलस्य राष्ट्रदेवतायाः विश्ववन्द्यस्य महाप्रभु-श्रीजगन्नाथस्य वृन्दारकवृन्दवन्दनीयपदारविन्दयुगले विनत-शिरसा मया भक्तिनैवेद्यस्वरूप समर्पितं पुस्तकमेतत् ।

## पुस्तकस्थविषयावली

अनन्तमहिमार्णवस्य नीलाद्रिनिवासिनः श्रीजगन्नाथस्य सर्वदेवाराध्यत्वं, भक्तिमतां दर्शनार्थिनां श्रीक्षेत्रागमनं श्रीमन्दिर-निर्मातृणामुत्कलीयशिल्पिनां कलानैपुण्यं, गजपतिवंशजानां भूपालकुलमूर्द्धन्यानां नरपतीनां कुलपरपराक्रमेण महाप्रभोः सेवकत्वस्वीकरणं, दारुब्रह्मरूपधरस्य जगत्प्रभोर्जगन्नाथस्य दशावताररूपपरिग्रहणं, तस्य च भक्तवात्सल्यं, श्रीक्षेत्रस्यमाहात्म्यं, दशाहीनस्यापि जगदीश्वरस्य जगन्नाथस्य मानवप्रीतिप्रवटनार्थं

मानवीयसमस्तदशास्वीकरणं, पुण्यपुरुषोत्तमधामसान्निध्यलाभात् साधारणानामपि अनन्यसाधारणत्वं, कल्पवटादीनां महाप्रभोः दिदृक्षया रूपान्तरग्रहणं, वलिना वलेन शुभद्या सुभद्रया च सममेकत्रावस्थानेन सर्वेश्वरस्य जगन्नाथस्य सार्वजनीनसद्भाव-स्थानस्यआदर्शोद्‌वं षणं, नानामतावलम्बिनां धर्माचार्य्याणामागमनं तेषां च विश्वजनीनजगन्नाथधर्मस्य श्रेष्ठत्वप्रख्यापनं, जगन्नाथधर्मे सर्वधर्माणां स्वसत्तानिमज्जनं चेत्यादि विषयाः सुसंक्षिप्तं पुस्तकस्य क्षुद्रकलेवरे सन्निवेशिताः । तदनु आसमाप्ति दुर्विषह दुःखदहन-दग्धस्य लेखकस्याश्य दुर्द्दशाग्रस्तस्वजातेश्च दुर्गतिराशेरपनोदनेन सार्कं श्रेयःसम्पादनार्थं परमकारुणिकस्य मङ्गलमयस्य पुरस्तादेव व्याकुलप्रार्थनं तस्य च करुणामसृणकटाक्षपातार्थं सभक्तिक-निवेदन मस्मिन् संनिवद्धम् ।

मामकीनं पुस्तकमिदमधीत्य आशुमुद्रणाय यैः नवोन-लेखकाय मह्यम अशेषः समुत्साहः प्रदत्तः, तेभ्यः उत्कलवाचस्पति कविकोकिलाद्युपाधिभूषितेभ्यः अध्यापक श्रीयुक्त गौरीकुमार ब्रह्मामहोदयेभ्यः हार्द्दिककृतज्ञता ज्ञाप्यते ।

पुण्यतोयभार्गवीतटनिकटवर्त्तिनि भार्गवीविद्यालये मम प्रधानसंस्कृतशिक्षकताकाले विद्यालयस्य प्रधानशिक्षकपदमलंकु-र्वाणाः उत्कलसाहित्यधुरीणाः संस्कृतविशारदाः श्रीयुक्तभगवान महान्तिमहोदयाः एतत्पुस्तकस्य सत्वरमेव परिसमाप्तिकरणाय वन्धुजनोचितं परामर्शम् उत्साहातिशय्यं च दत्तवन्तः । ततस्तेभ्यः सहृदयेभ्यः आन्तरिकीं कृतज्ञताम् अर्पयामि । अन्ये च ये मम वन्धवः

एतत्सारस्वतकृत्यर्थं ममोद्यमं प्रशंसितवन्तः तेभ्यः मया विज्ञात्यते अशेषः साधुवादः ।

एतत् स्वीकार्य्यं यत् पुस्तकपठनावसरे नानाविधाः प्रमादाः सुधीवर्गाणां दृष्टिपथारूढ़ा भविष्यन्ति । किन्तु नीरात् क्षीरं गृह्णन्तः हंसा इव ते उदारधिया दोषान् परित्यज्य केवलं भक्तिरसं ग्रहीष्यन्तीति मे सविनयप्रार्थना ।

परिशेषे सर्वप्रथममेव मदन्तःस्थायिना येन अस्यां दिशि लेखनीं चालयितुं मन्दबुद्धये मह्यं बलवती प्रेरणा प्रदत्ता, तमहं तमोहं नीलाद्रिनाथमन्तर्यामिनं नतेन मूर्द्धा शरणं यामि ।

विनीतः
पण्डितसुदर्शन-आचार्य्यः
अवसरप्राप्तसंस्कृतशिक्षकः
ता १० । १० । १९८६

( १ )

यदीयं पादाब्जं विबुधनिकरा भक्तिविनताः
सदा संसेवन्तेऽपरिमितयशोगाननिरताः ।
स्वयं देवाराध्यो मदनशमनो यत्स्तुतिपरः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( २ )

भयार्त्तानां भीतिं हरति सकलां यः करुणया
तथा यश्चानन्तं दलितदलदुःखं दलयति ।
विपत्पारावारादवति भुवि यः खिन्नमनसः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ३ )

विशाले प्रासादे प्रबलवलदेवेन सहितो
भगिन्या च प्रीत्या परमपुरुषो यो निवसति ।
सदा भक्ताः सेवासुखरसविदो यस्य विनताः
स नीलाद्रौ वासी भवभयविनाशी भवतुमे ।

( ४ )

यथा पारावारे सकलसरितो लीनपुष

स्तथा पीठे यस्य प्रचुरमतवादाश्च मिलिताः ।

पवित्रं यद्धाम प्रवरसमतामन्त्रकथकं

स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ५ )

बसन् देवैः सार्द्धं कुसुमतुलसीभूषिततनुः

वहन् रत्नैर्दीप्तं कनकमुकुटं यः स्वशिरसि ।

विनम्राणां नृणां हरति नयनं चापि हृदयं

स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ६ )

असंख्यानां नाम्नां भुवनविदितं यस्य परमं

जगन्नाथो नामेति च हृदयचुम्बि प्रमददम् ।

स्मरन्तो यं सन्तो भवभवनमध्येऽतिसुखिनः ।

स नीलाद्रौ वासी भवभयविनाशी भवतु नः ।

( ७ )

सशोके भूलोके बहुविधविपद्भिः परिवृते

सदा हिंसाक्रोधानलकवलिते शाठ्यजड़िते ।

मुहूर्त्तं यन्नामस्मरणमधिकं यच्छति सुखं

स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ८ )

करालोऽयं कालोऽतलजलधिसंवेष्टितमही-
स्थितानां भूतानां क्षुधितजनवद् भक्षणपरः ।
परं सिन्धोस्तीरे रुचिर इह यो भास्यति चिरं
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ९ )

विरक्तः सँन्यासी वनवननिवासी धृतजटः
सकामः ससारी नवपटविराजत्कटितटः ।
कृपाभिक्षू यस्य प्रणतजनसंरक्षणपटोः
स नीलाद्रौ वासी भवभयबिनाशी भवतु मे ।

( १० )

शरच्चन्द्रज्योत्स्नाधवलवपुषा राजति बलः
स्फुरद्विद्युद्वर्णा निवसति सुभद्रा च शुभदा ।
समीपे यस्यैव स्वयमपि च यो वारिदरुचिः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ११ )

महालीला नीलाम्बुजरुचिरनेत्रस्य सततम्
अमर्त्येभ्यो मर्त्ये वितरति सुखं यस्य विपुलम् ।
पुरी धन्या यस्योत्सवकलकलैर्नित्यमुखरा
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( १२ )

सुदूरादायान्ति प्रबलहृदयावेगचपला
जना नित्यं यस्याम्बुजवदनसन्दर्शनधिया ।
कृपाकूपारो यस्त्रिभुवनपरिव्याप्तमहिमा
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( १३ )

रथासीनो दीनोच्चयभयविषादप्रशमनो
विशाले मार्गे योऽगणितजनतायै वितरति ।
मुदा वर्षे वर्षे दुरितमथनं दर्शनसुखं
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( १४ )

गते शेषं कल्पेऽचरचरसमेतं जगदिदं
बलात् सर्वं कृष्ट्वा स्वजठरकटाहे क्षिपति यः ।
नरैर्यः संकृष्टो भवति तदपिप्रग्रहकरैः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( १५ )

महातेजोयुक्ता गजपतिकुलोद्भूतवसुधा-
धिपा पृथ्वीपानां मुकुटमणिसंघृष्टचरणाः ।
चिरादासेवन्ते विनतशिरसा यस्य चरणौ
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( १६ )

महामार्गस्थानां कमलनयनासक्तमनसां
पुरस्ताल्लोकानां नवनरपतिः कौलिकविधिम् ।
स्मरन् द्भिः प्रत्यव्दं भवति हि रथे यत्पदगतः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( १७ )

सदा यस्यादेशात्तपति तपनो वाति पवनो
ददातीन्दुः स्निग्धं किरणनिकरं वर्षति घनः ।
दधाति स्येगात्रे निखिलवसुधा शस्यविभवं
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( १८ )

पुरा श्रीचैतन्यश्चिरनवनवद्वीपवसति-
महाप्राणः प्राणप्रियावभुपदप्रेक्षणमतिः ।
समायातो यस्यापरसुरपुरीसन्निभपुरीं
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( १९ )

अनु स्तम्भं व्यालावलिपरमशत्रोर्वलवतः
स्थितो दृष्ट्वा यस्य त्रिभुवनपतेः कञ्जलपनम् ।
महभावाविष्टः सपदि स विसंज्ञः समभवत्
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( २० )

मनीषी सँन्यासी जलधितटवासी वरवशी
पुरा श्रीशं श्रीशङ्कर इह कलौ शङ्करनिभः।
ध्रुवं यं संप्रेक्ष्य प्रमुदितमनास्तत्क्षणमभूत्
स नीलाद्रौ वासी भवभयविनाशी भवतु मे।

( २१ )

तथाऽन्ये विद्वांसः परमगुरवो धर्मजगतो
नमस्या निम्बार्कप्रभृतय इहागत्य परमाम्।
ददुर्भक्तिं यस्मै चरणपतिताः शुद्धमनसा
स नीलाद्रौ वासी भवभयविनाशी भवतु मे।

( २२ )

कथान्येषां का वा कतिचन समागत्य यवना
महाभावप्रेमामृतरससरस्वन्मग्नहृदयाः
अहो सश्रद्धं यत् स्तवरचनया कालमनयन्
स नीलाद्रौ वासी भवभयविनाशी भवतु मे।

( २३ )

अकर्णोऽपि श्रोता पतितजनताकातरगिरः
विहीनः पादाभ्यामपि भुवनकोटिद्रुतचरः।
तथा यो निःस्वानां करयुगलशून्योऽपधनः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे।

( २४ )

अजन्मा सन् जातः सतततरुणः सन् मधुमयं
नवीनं तारुण्यं वहति वपुषि श्यामलरुचौ ।
जराहीनः सन् यो भव त जरया जर्जरतनुः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( २५ )

सदा नीरोगः सन् कटुकमगदं यश्च पिबति
क्षुधानिर्मुक्तः सन् मधुरमशनं भक्षयति च ।
यथाकालं मृत्युं मरणरहितः संश्च लभते
स नीलाद्रौ चारी सततशुभकारी भवतु मे ।

( २६ )

तथास्वप्नः शेते त्रिगुणरहितः सन् गुणयुतः
विमुक्तः सन् वन्धादपि कठिनरज्ज्वा नियमितः ।
वदान्यः सन् भावानपि सपदि गृह्णाति भुवि यः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( २७ )

अतन्द्रः सन् विश्राम्यति निभृतसंरुद्धभवने
पिपासाशून्यः सन् मधुरसलिलं यश्च पिवति ।
त्रिलोक्याः सम्राट् यो नरनिकरभावाश्रयरः
स नीलाद्रौ वासी दुरितभयनाशी भवतु मे ।

( २८ )

गृहीत्वा यो दिव्यं झसवपुरधीशस्त्रिजगतो
महावीर्य्यं शङ्खं विबुधकुलवंवस्वतसमम् ।
जघानाब्धेर्गर्भे हृतसकलवेदं दनुसुतं
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( २९ )

विशालां यो धृत्वा कुलिशकठिनां कच्छपतनुं
महाशैलश्रेणीवननदनदीकाननयुताम् ।
दधौ पृष्ठे पृथ्वीं सुममिव करी वृक्षपतितं
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ३० )

सपाथःपाथोदच्छविनिभमहाशूकरतनुं
समादाय श्रीमान् बलिसदनगर्भस्थपृथिवीम् ।
दधौ यो दंष्ट्राग्रे गिरिशिखरतुल्येऽतुलबलः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ३१ )

समुत्कण्ठः कण्ठीरवचियैर्यो बधिरयन्
दिशो भक्तं त्रातुं झटिति विपदोऽनन्यमनसम् ।
हिरण्यं हन्ति स्म प्रविकटनृसिंहाकृतिधरः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ३२ )

वदान्यानां मुख्योऽहमिति हृदये यः कलयतो
वलेर्मानं हन्तुं स्थिरतरमना वामनतनुम् ।
त्रिभिः पादै धृत्वा त्रिभुवनमिदं व्याप सहसा
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ३३ )

कठोरः क्रूरे यः शितमुखकुठारास्त्रवरधृग्
गृह्णीत्वा सप्तार्च्चिर्निभभृगुपतिप्रोज्ज्वलतनुम् ।
अभूत् क्षत्रश्रेणीकुपितमतिकालान्तकसमः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ३४ )

युगे त्रेताख्ये योऽभिनवजलदश्यामलरुचि
समायातः कामोऽपर इव वहन् राघवतनुम ।
दशग्रीवः प्राप्तो वलपरिचयं यस्य समरे
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ३५ )

विधाय श्रीयुक्तं धवलकरशुभ्रं वलवपु –
र्वलारातिज्ञाताधिकतरवलं दीप्तिवहुलम् ।
भुवं यः संप्राप्तो रिपुवलविनाशाय वलवान्
स नीलाद्रौ चारी सततशुभकारी भवतु मे ।

( ३६ )

तपःकान्तं शान्तं विपुलकरुणास्नेहवरुणा—
ल्यो धृत्वा वुद्धापघनममिताभं रविनिभम् ।
धरित्रीं यो धर्मत्रिदशसरिताऽस्नापयदहो ।
स नीलाद्रौ बासी भवभयविनाशी भवतु मे ।

( ३७ )

कलौ कल्के रूपं प्रलयगहनज्वालसदृशं
य आदाय म्लेच्छान भुवनजनसन्दोहभयदान् ।
महाकोपाविष्टः करधृतकृपाणो व्यदलयत्
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ३८ )

पुरा कृष्णः सन् यः शमनभगिनीतीरनिकटे
वहून् दुष्टान् दैत्यान् निजभुजवलेन व्यदलयत् ।
गिरा पार्थो यस्य प्रतिहतविमोहः समभवत् ।
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ३९ )

यदन्नं भुञ्जाना भुवि जनगणाः पावततमं
यथा पूता धन्या अभिनवमहानन्दथुभुजः ।
सुधां शश्वद् भुक्त्वा दिवि दिविषदो नैव तु तथा ।
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ४० )

असारे संसारे कलिकलुषघोरे सुखहरे
सदैवेर्ष्यासूया गरलजठरे दुर्गतिकरे ।
अहो यस्य प्रीत्या सुगुणमननं सारमनिशं
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ४१ )

श्रिया पूर्णं श्रीमन्दिरमनुपमं राजति चिरं
समुच्चं गम्भीरं सुरकुलमहाविस्मयकरम् ।
स्वयं योऽत्र श्रीशो वसति सततं हृष्टमनसा
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ४२ )

अहो नीलं चक्रं गगनतलचुम्बि प्रतिदिनं
महापापान् चीनांशुकचलकरेणाह्वयति वै ।
पवित्रं यत्पीठं सकलकलुषव्यूहदलनं
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ४३ )

समुत्फुल्लः फुल्लोत्पलदलनिभं नेत्रयुगलं
नरः दृष्ट्वा यस्य स्वमनसि तदा चिन्तयति यत् ।
पदाधीनं दीनं भुवनजनको लोकयति मां
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ४४ )

वृहत् प्राकारान्तो विमलवदना भाति बिमला
सदा देवी लोला कमलसदना चापि कमला ।
पुन र्वागदेवी यत् सुखशुभदसंदर्शनधिया
स नीलाद्रौ वासी भवभयबिनाशी भवतु मे ।

( ४५ )

अकुण्ठो वैकुण्ठोत्तमसुखपरित्यागविषये
वहन् दारुब्रह्म प्रियतनुमहो भाति भुवि यः ।
यदीयश्रद्धाया निखिलभुवने नास्ति तुलना
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ४६ )

वहून् शाखावाहून् मृदुदलयुतां श्चापि चरणान् ।
द्रुमेभ्यो दत्त्वा यो रुचिरकरपादै र्विरहितः ।
स्वयं स्रष्टाप्येवंविधतनुवशीभूतहृदयः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ४७ )

प्रियभ्रातुर्यस्ये दृशतनुदशां प्रेक्ष्य पुरतः
प्रलम्बघ्नो देवो हलमुसलधारी निजतनुम् ।
तथा कृत्वा दत्ते निविड़ममतायाः परिचयं
स नीलाद्रौ वासी भवभयबिनाशी भवतु मे ।

( ४८ )

सुभद्रा भद्राङ्गी स्वतनुसुषमाविच्युतिभयं
विहाय स्नेहार्द्राऽधिकविकलतामात्मवपुषः ।
प्रकाश्यैवं नित्यं निवसति मुदा यस्य सविधे
स नीलाद्रौ बासी भवभयविनाशी भवतु मे ।

( ४६ )

बृहद्भानुज्योतिर्मथनकुशलं चक्रमपि तत्
स्वगात्रं संगोप्य प्रभुतनुमवालोक्य सहसा ।
धृतस्तम्भाकारं वसति सुचिरं यस्य सविधे
स नीलाद्रौ वासो भवभयविनाशी भवतु मे ।

( ५० )

तुषारैः संश्लिष्टं रजतरुचि कैलासशिखरं
परित्यज्य स्थाणुः सुरनरगणैर्वन्द्यचरणः ।
समायातः कान्त्या नवघनजितो यस्य निकटं
स नीलाद्रौ चारी भवभयविदारी भवतु मे ।

( ५१ )

स्वयं सिद्धैर्देवो नगपतिसुतावल्लभसुतो
गणेशः सर्वेषामभिलषितदानैकनिपुणः ।
उपास्ते य भक्त्या सततशरणापन्नसदयं
स नीलाद्रौ चारी भवभयविदारी भवतु मे ।

( ५२ )

पृथिव्यां वैकुण्ठाधिपरविरुदेतीति मनसा
प्रकल्प्यैवं कल्पद्रुम इह समागत्य च दिवः।
प्रदत्ते सुच्छायां कृतवटतनुर्यस्य पुरतः
स नीलाद्रौ वासी भवभयविनाशी भवतु नः।

( ५३ )

क्षितौ दारुभूतं सबलमथ दृष्ट्वा स बलवान्
हनूमान् यं लङ्काधिपतितृणदीप्तानलसमम्।
शिलारूपं धृत्वा प्रकटयति भक्तिं प्रतिदिनं
स नीलाद्रौ वासी भवभयविनाशी भवतु मे।

( ५४ )

यथा वीचीमाला सलिलनिधिजा स्फीततनुका
पुनस्तस्मिन् लीना भवति समयेनैव कियता।
तथा यस्माज्जाता क्षितिरहह यस्मिन् प्रविशति
स नीलाद्रौ वासी भवभयविनाशी भवतु मे।

( ५५ )

निशीथिन्याः शेषात् समधिकनिशां यावदमलान्
जगद्राजो राजोचितविविधपूजोत्सवविधीन्।
प्रकुर्वाणा यस्य प्रगुणितसुखाः सेवकगणाः
स नीलाद्रौ वासी शुभसुखविकाशी भवतु मे।

( ५६ )

नरेन्द्राद्या यस्याघमथनसुधामस्थितिवलात्
जलाधाराः पश्चापि च दधति तीर्थत्वममलम् ।
तथाऽपेयक्षीरो लवणजलधिस्तीर्थचरतां
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ५७ )

प्रसादाकूपारौ सततचरणासेवनपराः
प्रदीपोऽप्यध्वायं गिरिसदृशपाषाणभवनम् ।
सहृच्छब्दाद्यानि त्रिभुवनपतेर्यस्य कृपया
स नीलाद्रौ वासी शुभसुखविकाशी भवतु मे ।

( ५८ )

चिताभस्माच्छन्नं मनुजगणशेषाश्रयपदं
श्मशानं वन्धूनां नयनसलिलैरार्द्रमनिशम् ।
अहो स्वर्गद्वाराभिधमिह च यत्सन्निधिगतं
स नीलाद्रौ वासी भवभयविनाशी भवतु मे ।

( ५९ )

फलाशी सन्न्यासी विजनविपिने दुर्लभसुखे
व्रती मुक्तिं लब्धुं भवति सततं ध्याननिरतः ।
परं तस्या दानेऽकृपणमति यन्मुक्तिभवनं
स नीलाद्रिस्थायी विमलमतिदायी भवतु मे ।

( ६० )

तुषाराद्रिश्वेतं बहुविभवयुक्तं शबलितं
ध्रुवं रम्यं हर्म्यं न भवति कदा सम्मदपदम् ।
सदानन्दाधारा परमिह यदानन्दविपणिः
स नीलाद्रौवासी दुरितभयनाशी भवतु मे ।

( ६१ )

कलाविद्यापारंगतशतसहस्रोत्कलसुतै-
रिदं तुङ्गं श्रीमन्दिरमिह विनिर्माय रुचिरम् ।
अहो यस्मै भक्त्यार्पितमखिललोकैकगुरवे
स नीलाद्रिस्थायी सततशुभदायी भवतु मे ।

( ६२ )

महाचिन्तावैश्वानरकवलितान् मानवगणान्
प्रियात्मत्यागार्थं दृढतरमतीन् दीनदलितान् ।
न संत्याज्याः प्राणा इति हृदयतो यो निगदति
प्रपन्नश्रद्धावान् मम स भगवानेव शरणम् ।

( ६३ )

कृपालुं यं ध्यायन्नपि जगति भक्तो यदि कदा
भवेत् कामासिद्धेर्गुरुतरशुचा खिन्नहृदयः ।
तथाप्येतत् सत्यं न विरमति यच्चिन्तनसुखात्
स नीलाद्रिस्थायी विमलमतिदायी भवतु मे ।

( ६४ )

पिता वा माता बा परमसुहृदो वा प्रियसुता
प्रिया वा पुत्रो वा प्रभवति न कस्त्रातुमवनौ।
इति ज्ञात्वा नित्यं श्रयति भुवि यं धीरनिवहः
स नीलाद्रौ वासी कुमतिततिनाशी भवतु मे।

( ६५ )

क्षितौ पीतश्वेतासिततनुवहा लोकनिवहा
वसन्तीति ज्ञात्वाऽसितवपुरहो धारयति यः।
सिताङ्गं यद्भ्राता किल यदनुजा पीतरुचितां
स नीलाद्रिस्थायी सततशुभदायी भवतु मे।

( ६६ )

वहन् य द्व्वेंशं धृतनिशितखड्गोऽग्रजयुतः
प्रदातुं भक्ताय क्षितिसुखभुजे काम्यविजयम्।
हयारूढो यातश्चिररुचिरकाञ्चीं सपदि यः
स नीलाद्रिस्थायी विमलसुखदायी भवतु नः।

( ६७ )

चतुर्द्वारं यन्मन्दिरगिरिवरस्य प्रविततं
नरानेवं नित्यं कथयति पथा येन चलत।
परं शेषे प्राप्यो रसघनचिदानन्दपुरुषः
स नीलाद्रौ वासी भवभयविनाशी भवतु मे।

( ६८ )

असम्पूर्णो देहो भवति यदि वा दारुगठितो
महारूपश्रीभिश्चिरमनुपमाभिश्च तदपि ।
अहो यः कन्दर्पप्रचुरमदमर्द्दी वरभुजः
स नीलाद्रौ वासी भवभयबिनाशी भवतु मे ।

( ६९ )

प्रतापी सन्तापी कुटिलमतिपापी पुनरपि
प्रजानाथं भक्त्या भजति दनुजारिं जगति यम् ।
यमाश्रित्य प्रीत्या व्रजति सुगतिं तापसततिः
स नीलाद्रीस्थायी वरशरणदायी भवतु मे ।

( ७० )

महापापस्तापत्रयभयहरं यं क्षणमपि
स्मरन् दिव्यं धाम प्रचुरसुखपूर्णं प्रचलति ।
न चास्त्यन्यो यस्मात् परमसदयः कस्त्रिभुवने
स नीलाद्रौ वासी निजहृदि विलासी भवतु मे ।

( ७१ )

सदा शङ्कपङ्के रुहनयन कारुण्यजलधे
विपत्पातं दृष्ट्वा कुलिशकठिनं हन्त शिरसि ।
अतोऽहं ते प्रार्थी प्रबलतरबाष्पाकुललो
जगत्येकस्त्वं मे मलिननियतेरेव शरणम् ।

( ७२ )

बिपन्नानां बन्धुः परमसुखसिन्धुर्मतिमतां
रमाचेतोहारी सततमुपकारी खलु सताम् ।
अनाथानां नाथो भवभवनमध्ये भवति यः
स नीलाद्रेर्नाथो मम दुरितपाथोधिशरणम् ।

( ७३ )

भवे ये त्वत्पादाम्वुजभजनहीना जनगणा
लभन्ते ते नाथ प्रचुरसुखसौभाग्यनिचयम् ।
परं ते नित्यं हा नयनसलिलैर्धौतवपुषो
महच्चित्रं ये त्वत्पदसरसिजोन्मत्तमधुपाः ।

( ७४ )

दृढ़ीभूता यावद् भवति भवति प्रीतिरमला
घनीभूता ताव विपदविरतं हन्त महती ।
इतः प्राच्यां चन्द्रो विमलकिरणश्रेणिसुभग
स्ततः सूचीभेद्यं विकटतिमिरं पश्चिमदिशि ।

( ७५ )

परित्रासि प्रीतो बिपद इति निश्चित्य मनसा
विदग्धो दुःखैस्त्वामशरणजनो याति शरणम्
कृपालुः सन् किन्तु त्वमवलजने चेदकरुण
स्तदा न हि त्वां कः सुखं कथं वा प्रणमति ।

( ७६ )

मनीषासम्पन्ना मम भजनसंसक्तमनस-
स्ततो नाहं दत्तश्रवणयुगलो मूर्खवचसि ।
वदेश्चेन्मामेवं तदपि भव कारुण्यमृदुकः
पितुः श्रद्धा नूनं समधिकतरा खञ्जतनये ।

( ७७ )

अवश्यं जानामि त्रिभुवनपितस्त्वच्चरणयो-
रयोग्योऽहं दासो भवितुमपराधैर्विजड़ितः ।
तथापि क्षन्तव्यः सविनयनिवद्धाञ्जलिपुटः
क्षमाशीलः पुत्रे सततमपराद्धेऽपि जनकः ।

( ७८ )

सदोषं मां दृष्ट्वा भवसि विरतश्चेदविरतं
क्षमादानात् स्वामिन् जगदवनविध्वंसनपटो ।
तदा ब्रूहि क्षम्यस्तव भवति कोऽस्मिन् भवतले
प्रभोर्धर्मः प्रायोऽगुणवति जने स्नेहपरता ।

( ७९ )

प्रभुः सन् स्वं धर्मं यदि च भगवन्नावसि तदा
कथं तस्मिन् सक्तो वद भुवि भवेन्मानवगणः ।
अहो स्याद्यद्येवं विशति सहसा दुःसहदशा
युगान्तात् प्रागेव प्रलयमुपयात्यत्तखिलभूः ।

( ८० )

प्रभो त्वं स्रष्टा सन्नभिलषसि चेत् सृष्टिविलयं
ममास्ते नो किञ्चित् सुरतिलक वक्तव्यमपि ते ।
अपत्यानां हन्ता भवति यदिवा स्नेहजनक-
स्तदास्मिन् संसारे वद मधुरिपो को वदति किम् !

( ८१ )

अवश्यं भोक्तव्यः फलसमुदयः कर्मण इति
ब्रवीष्येवं चेन् मां तदपि न मनस्तुष्यति मम ।
तथा चेत्ते सिंहासनतलगतो भक्तिविनतः
कथं वा वाष्पाम्बुप्लुतनयनयुग्मो भवति कः ।

( ८२ )

अवार्य्योऽयं स्वामिन् यदि च फलभोगो भुवि तदा
सुदाम्नो दारिद्र्यं सपदि भवता किं न विहृतम् ।
प्रदत्तं कृष्णायै वसनममितं किं न सदसि
प्रसादः संखिन्ने वनगजवरे किं न च कृतः ।

( ८३ )

त्वयि प्रीतिस्तेषामयुतगुणिताऽऽसीदिति च चेद्
विदित्वा मत्प्रीतेर्मयि भवसि नानुग्रहपरः ।
तदेकस्मिन् विप्रे कलुषतमसाच्छन्नहृदये
प्रसन्नस्वान्तोऽभूर्भजनविमुखे माधव कथम् ।

( ८४ )

अहं नूनं तस्मादधिकतरपापीति मनसा
विचार्य्यैवं नित्यं कठिनहृदयस्तिष्ठसि यदि ।
तथाप्येतद् भाषे तव चरणदासे कुरु कृपां
ह्रदः किं कीलालं तृषितपतितायार्पयति न ।

( ८५ )

जगद्यारूद्याने विषनग इवास्मीति भगवन्
महावाहो विश्वाभयद मनसा चिन्तयसि चेत् ।
विपद्वात्याघातैश्चलयसि न तून्मूलयसि किं
रथाङ्गेन त्वं वा वद कथमिमं कृन्तसि न च ।

( ८६ )

महापापिस्पर्शोऽनुचित इति संचिन्त्य मनसा
प्रसन्नश्चेन्न स्या मयि हतविधौ कञ्जलपन ।
तदा कृष्णे पक्षे विधुरिव भवेन्म्लानमचिराद्
ध्रुवं ते पापौघप्रशमनकलोपार्जितयशः ।

( ८७ )

इतो मां विश्वात्मन् न नयसि महाशोकविवशं
ततः शान्ति स्वल्पामपि न च ददासि प्रियतम ।
व्यथा किं ते काम्या पदजलजपूजारचयितुः
कदा तेन प्राप्यो न किमिह तवानुग्रहकणः ।

( ८८ )

अकीर्त्तिर्मान्यानामधिकतरवैक्लव्यजननी
मृतेरित्युक्तं प्राक् किल भगवता पार्थपुरतः ।
इदानीं चेत्तस्यां स्वयमपि भवेराग्रहवशः
तदा त्वत्पादाङ्कानुसरणपराः स्युर्भुवि नराः ।

( ८९ )

विभो दुःखं घोरं प्रखरदहनाद् ुःसहतरं
ततः सार्द्धं तेन व्यपगतफला तस्य तुलना ।
बृहद्भानुर्दैवः स्वयमपि महादुःखदहनै
र्विदग्धोऽसंदिग्धं भवति वद का प्राणिषु कथा ।

( ९० )

शिखाश्रेणीभीमो दहतु दहनो नाम भुवनं
घनो धारापातैः शमयितुमलं तं क्षणमपि ।
असह्यं दुःखौघं तपतु हृदयं मे प्रतिदिनं
कृपासिन्धो दक्षस्त्वमसि कृपया तद्दलयितुम् ।

( ९१ )

कृपानीरं यत्ते नरहृदयतापप्रशमनं
वदान्यं प्रीतीनामभयदमुदारं कुशलदम् ।
सदाहं सर्वज्ञ श्रुतिनुत तदुत्कण्ठितमना
घनश्याम प्राप्तुं घनघनरसं चातक इव ।

( ६२ )

कृपालो दुश्चिन्ताविषशमनमाशीर्विषपर
त्वदाशीःपीयूषं यदि सुलभमेवेह भवति ।
तदा वीतश्रद्धः सुरपतिपदे स्यामविरतं
नरः काचे चिन्तामणिपरमतृप्तो हि विमुखः ।

( ६३ )

भवेः पश्चाद्वक्त्रो यदि च भगवन्निर्दयतया
मया भूयोभूयो विनतशिरसा सन्नपि नुतः ।
तथाप्येतत् सत्यं तव पुरत एषोऽधमसुतो
महद् दुःखं नित्यं कथयति विभो दुःसहतरम् ।

( ६४ )

नराणां दुःस्थानां गुणवति जने चेत् सफलतां
प्रयात्याशा चित्तालयचिरनिबद्धा बलवती ।
तदा मे विश्वासो भवति सुगुण दन्वति कदा
महानाशावृक्षो नवफलयुतो हन्त भवति ।

( ६५ )

मदीयैषाऽऽशा चेदिह न सफला जन्मनि तदा
वदाम्येतन्न स्याद् दरकर परस्मिन् किल तथा ।
दृढा भक्तिर्देवे कपटरहिता सिध्यति कदा
क्षितावुप्तं बीजं भवति खलु काले द्विदलितम् ।

( ६६ )

विभो तत् साफल्यं सकलजनकाम्यं हृदयवन्
अपेक्षेऽहं लब्धुं धृतविपुलधैर्य्यो बहुयुगम् ।
यदर्थं योगाग्नौ जहति निजकायं मुनिगणाः
कथं तत् प्राप्स्यै वा सपदि विपदि स्यामपि चलः ।

( ६७ )

कदा भाग्याकाशं मम दुरितदुष्टस्य मलिनं
प्रसादात्ते लीलामय भुवि भविष्यत्यरुणितम् ।
ध्रुवं त्वं जानीषे न पुनरहमज्ञानपतितः
त्वदिच्छा हि स्वामिन्नपि दुरधिगम्या दिविषदाम् ।

( ६८ )

परं याचे शीघ्रं त्रिभुवनशरण्याश्रितसुहृत्
स्वजात्यर्थं तेऽहं विपुलकरुणाऽऽसारपतनम् ।
बलीयान् सन्तापो ननु भवति तस्याः प्रशमितो
गणप्राणः प्राणप्रिय भव जगत्प्राण जगति ।

( ६९ )

समाजे लोकानामकुशलव्रतां दुर्गतितति
प्रभो शोच्यां पद्मायतनयन पश्यन्नपि यदि ।
उदासीन स्तिष्ठेर्मणिखचितसिंहासनगतः
कथं विश्वोपास्यो भवसि भगवन् मे वद तदा ।

( १०० )

परिव्याप्ता हिंसा मधुरममता हन्त विगता
विलुप्ता सत्प्रीतिर्विषमशठता च प्रगुणिता ।
गता दूरं शान्तिः प्रतिपदमशान्तिः प्रकटिता
दृढ़ीभूता नीचा हृदय-सदने स्वार्थपरता

( १०१ )

सुखं स्वप्नप्रायं चिरसहचरो रोगनिकरो
महादैन्यादर्द्धाशनमनशनञ्चाप्यविरले ।
त्वया सृष्टा ये ते खरतरविषादाग्निपतिता
जनाः शोकोच्छ्वासोद्गतघनरसस्नातनयनाः ।

( १०२ )

धनाधीशाः स्वल्पाः प्रचुरसुखलाभप्रमुदिता
जनाः संख्यातीतास्त्वपरिमितदुःखैः कवलिताः ।
विधातुस्त्वे नैवंविधचिरविधानं समुचितं
प्रभोः काम्या नूनं जगति हि विचारस्य समता ।

( १०३ )

त्वया धर्मग्लानिं भुवि यदि कदा पश्यसि विभो
तदात्मानं पश्चाद्रमण सृजसीत्येव गदितम् ।
इदानीं तां पश्यन्नपि झटिति चेन्नावतरसि
प्रजावन्द्यो नूनं वितथवचनस्त्वं तु भवसि ।

( १०४ )

प्रतीकारार्थाय त्रिदशनिकरैर्वन्द्य भवते
मया दुःखं जातेर्विनतशिरसा ज्ञापितमज ।
अविज्ञातोऽपि त्वं भवसि करुणार्द्रो जनगणे
सुतानां सर्वेषां कुशलकृदनुक्तोऽपि जनकः ।

( १०५ )

पुराऽऽसीद् या ज्ञानारुणकरचयोद्भासिततनुः
क्षितौ यस्या व्याप्तो विपुलमहिमा विस्मयकरः ।
अहो तस्या भूमेर्हृदयमथिनीं दारुणदशां
विलोक्यापि क्लेशं चिरसदय किं नानुभवसि ।

( १०६ )

उदारात्मन् भूयोऽवतर भुवि धृत्वा नरवपु-
र्वनध्वान्तभ्रान्तान् गमय च नरानुज्ज्वलपथम् ।
त्वदीयं नेतृत्वं ननु परमकाम्यं हितकरं
त्वदन्यः कस्त्रातुं विषमविपदो नैव कुशलः ।

( १०७ )

किमेकस्त्वं स्रष्टा क्वचिदपि पुनः कश्चिदपरः
प्रपाताऽऽस्ते नैवं त्वदुपरि च संरक्षणभरः ।
अतो भाषे भूयः सदयहृदयं प्राञ्जलिरहं
सहायः सर्वेषां भव भुवनभर्त्तर्भवतले ।

( १०८ )

महामूर्खत्वाद् यत् तव च करणीयं जगति तत्
जगत्कर्त्तारं त्वामहमुपदिशन् पण्डित इव ।
क्षमासिन्धो दोषी हतमतिमतिक्लेशिनमतः
क्षमस्वेमं दासं चरणपतितं बिश्वजनक ।

समाप्तम्

लेखकस्य अप्रकाशितसंस्कृतपुस्तकानि :—

१ - पितृस्मृतिशतकम्

२ संस्कृतकवितावल्लरी

३ सीमान्तप्रहरी (नाटकम्)

४ स्तुतिलहरी

५ लघुरचनावली